४७ मोक्षोप्यनयैवद्वत्याप्राप्यइत्याहादूरेति अतएवसपुरुषः सुखरूपस्तिष्ठतिहिप्रसिद्धंयस्यरजोरूपः संकल्पः सलोकेव्यवहारवान् ४८
ततः व्यवहारयुतः पुत्रदारानुरंजितः संसारेराजससंकल्पकृततत्तत्कर्मवशात्तिष्ठतियस्यसंकल्प एतत्पूर्वोक्तंत्रिविधमपिरूपंपरित्यज्य
शाम्यतीतिशेषः ४९ सपरंपदमाप्नोतिसत्वरूपसंकल्पस्यहिक्रमेणसर्वसंकल्पनाशद्वारा दूरमोक्षत्वंप्रागुक्तंबोध्यं आत्मपरिक्षयेअ-
न्नात्मासंकल्पः अतस्त्वंदृष्टीः सर्वेंद्रियज्ञानानिपरित्यज्यमनसैवमनोविनियम्यविषयेभ्योनिवर्त्य ५० बाह्येंद्रियविषयसहितोय-
आभ्यंतरेंद्रियविषयोऽर्थस्तस्यतद्विषयस्यसंकल्पस्यक्षयंकुरुसंकल्पंत्यजेत्यर्थः अन्योपायेननसर्वथासुखप्राप्तिरित्याह यदीति

अत्यंतंनामसोभूत्वाकृमिकीटत्वमाप्नुयात् सत्वरूपोहिसंकल्पोधर्मज्ञानपरायणः ४७ अदूरमोक्ष
साम्राज्यः सुखरूपोहितिष्ठति रजोरूपोहिसंकल्पोलोकेसव्यवहारवान् ४८ परितिष्ठतिसंसारेपुत्र
दारानुरंजितः त्रिविधंतुपरित्यज्यरूपमेतन्महामते ४९ संकल्पःपरमाप्नोतिपदमात्मपरिक्षये दृष्टीः
सर्वाःपरित्यज्यनियम्यमनसामनः ५० सबाह्याभ्यंतरार्थस्यसंकल्पस्यक्षयंकुरु यदिवर्षसहस्राणि
तपश्चरसिदारुणम् पातालस्यस्यभूस्थस्यस्वर्गस्थस्यापितेनघ नान्यःकश्चिदुपायोऽस्तिसंकल्पो
पशमादृते ५२ अनाबाधेविकारेस्वेसुखेपरमपावने संकल्पोपशमेयत्नंपौरुषेणपरंकुरु ५३ संक-
ल्पतंतौनिखिलाभावाःप्रोताःकिलानघ छिन्नेतंतौनजानीमः क्वयांतिविभवाःपराः ५४ निःसं
कल्पोयथाप्राप्तव्यवहारपरोभव क्षयेसंकल्पजालस्यजीवोब्रह्मत्वमाप्नुयात् ५५

५१ नाहृशतपःपूर्वकंपातालाद्यन्यतमलोकस्थस्यापितवसंकल्पोपशमादृतेतंविना ५२अनाबाधेदुःखासंभिन्ने अविकारेविषयसं
बंधंविनैवप्राप्येपरमपावनेस्वात्मरूपेसुखेतत्प्राप्तिनिमित्तंनकश्चिदुपायो स्तीत्यर्थस्तस्मात्तद्रूपशमेयत्नंकुरु ५३ संकल्पस्यैवाधार
त्वात्तन्नाशेएवसर्वविषयनिवृत्तिरित्याह संकल्पतंताविति विभावाः विशिष्टोभावः संसारोयेभ्यस्तादृशास्तेपराभावास्तंक्वयांतीतिनजा
नीमः सर्वथानश्यंत्येवेतिभावः ५४तस्मान्निःसंकल्पोत्यक्तेच्छोयथाप्राप्तंव्यवहारंकुर्वित्यर्थः संकल्पक्षयफलमाह क्षयेति ५५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रसभंहठेनविकल्पजालंत्यक्त्वा अधिगतपरमार्थांब्रह्मतत्त्वंयेनतद्भावमुपेत्यप्राप्यतद्द्वितीयंपदंअधिगमयप्राप्नुहिविततसुखायानु-
च्छेद्यसुखायतदर्थंनिदिध्यासनमुपदिशति सुषुप्तिकालिकाचित्तवृत्तिर्यस्यतादृशोभव सकलविषयरहितचित्तवृत्तिरेवब्रह्माकारा
चित्तवृत्तिरितिभावः ५६ इतिश्रीमत्सकल० उत्तरकांडेषष्ठःसर्गः ६ वाल्मीकिनेति सद्गुरूपदेशात्कुशस्योत्तमाधि

अधिगतपरमार्थतामुपेत्यप्रसभमपास्यविकल्पजालमुच्चैः अधिगमयपदंतदद्वितीयंविततसुखाय
सुषुप्तचित्तवृत्तिः ५६ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेषष्ठःसर्गः ६
वाल्मीकिनाबोधितोसौकुशःसद्योगतभ्रमः अंतर्युक्तोबहिःसर्वमनुकुर्वंश्चचारसः १ वाल्मीकिर
पितौप्राहसीतापुत्रौमहाधियौ तत्रतत्रचगायंतौपुरवीथिषुसर्वतः २ रामस्याग्रेप्रगायेतांशुश्रूषु
र्यदिराघवः नग्राह्यंवैयुवाभ्यांतद्यदिकिंचित्प्रदास्यति ३ इतितौचोदितौतत्रगायमानौविचेरतुः
यथोक्तंऋषिणापूर्वंतत्रतत्राभ्यगायताम् ४ तांसशुश्रावकाकुत्स्थःपूर्वचर्यांततस्ततः अपूर्वपा
ठजातिंचगेयेनसमभिप्लुताम् ५ बालयोराघवःश्रुत्वाकौतूहलमुपेयिवान् अथकर्मांतरेराजास
माहूयमहामुनीन् ६ राज्ञश्चैवनरव्याघ्रःपंडितांश्चैवनैगमान् पौराणिकाःशब्दविदोयेचवृद्धाद्वि
जातयः ७ एतान्सर्वान्समाहूयगायकौसंप्रवेशयत् तेसर्वेहृष्टमनसोराजानोब्राह्मणादयः ८
रामंतौदारकौदृष्ट्वाविस्मितात्द्यनिमेषणाः अवोचन्नसर्वएवैतेपरस्परमथागताः ९ इमौरामस्य-
सदृशौबिंबाद्बिंबमिवोदितौ जटिलौयदिनस्यातांनचवल्कलधारिणौ १० विशेषंनाधिगच्छामो
राघवस्यानयोस्तदा एवंसंवदतांतेषांविस्मितानांपरस्परम् ११

कारित्वाच्च तत्कालमेवनिदिध्यासनांत-
त्साधनसंपदितिभावः यत्करोतितदनुकुर्वन्निवतत्रास्थाभावादितिभावः १ २ यदिकिंचिद्राघवोधनंदास्यति तन्नग्राह्यम्
३ यथोक्तंयथाशिक्षितम् ४ अपूर्वपाठजातिं अपूर्वपठनरीतिंगेयेनगानेनव्याप्ताम् ५ ६ शब्दविदः व्याकरणविदः ७
संप्रवेशयत् अडभावआर्षः ८ रामंदारकौचदृष्ट्वा विस्मिताःसंतोनिमेषणाअपश्यन्नितिशेषः ९ बिंबंप्रतिबिंबम् १० ११



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अतिमानुषं मनुष्यलोकीयगानमतिक्रांतम् १२ १३ नौआवांवन्यभोजनौस्वइतिशेषः १४ १५ १६ १७ प्रत्ययंसर्वजनस्यशुद्धत्वनिश्चयोत्पादकंश

उपचक्रमतुर्गातुंतावुभौमुनिदारकौ ततःप्रवृत्तंमधुरंगांधर्वमतिमानुषम् १२ श्रुत्वातन्मधुरंगीतमप
राण्हेरघूत्तमः उवाचभरतंचाभ्यांदीयतामयुतंवसु १३ दीयमानंसुवर्णंतुनतज्जगृहतुस्तदा किम-
नेनसुवर्णेनराजन्नौवन्यभोजनौ १४ इतिसंत्यज्यसंदत्तंजग्मतुर्मुनिसन्निधिम् एवंश्रुत्वातुचरितं
रामःस्वस्यैवविस्मितः १५ ज्ञात्वासीताकुमारौतौशत्रुघ्नंचेदमब्रवीत् हनूमंतंसुषेणंचबिभीषण
मथांगदम् १६ भगवंतंमहात्मानंवाल्मीकिंमुनिसत्तमम् आनयध्वंमुनिवरंससीतंदेवसंमितम्
१७ अस्यास्तुपर्षदोमध्येप्रत्ययंजनकात्मजा करोतुशपथंसर्वेजानंतुगतकल्मषाम् १८ सीतांत
द्वचनंश्रुत्वागताः सर्वेऽतिविस्मिताः ऊचुर्यथोक्तंरामेणवाल्मीकिंरामपार्षदाः १९ रामस्यहृद्गतंस
र्वंज्ञात्वावाल्मीकिरब्रवीत् श्वःकरिष्यतिवैसीताशपथंजनसंसदि २० योषितांपरमंदैवंपतिरेव
नसंशयः तच्छ्रुत्वासहसागत्वासर्वेप्रोचुर्मुनेर्वचः २१ राघवस्यापिरामोऽपिश्रुत्वामुनिवचस्तथा
राजानोमुनयःसर्वेशृणुध्वमितिचाब्रवीत् २२ सीतायाःशपथंलोकाविजानंतुशुभाशुभम् इत्यु
क्ताराघवेणाथलोकाःसर्वेदिदृक्षवः २३ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवमहर्षयः वानराश्चस
माजग्मुःकौतूहलसमन्विताः २४ ततोमुनिवरस्तूर्णंससीतःसमुपागमत् अग्रतस्तमृषिंकृत्वा
यांतींकिंचिदवाङ्मुखी २५ कृतांजलिर्बाष्पकंठासीतायज्ञंविवेशतम् दृष्ट्वालक्ष्मीमिवायांतींब्र
ह्माणमनुयायिनीम् २६ वाल्मीकेःपृष्ठतःसीतांसाधुवादोमहानभूत् तदामध्येजनौघस्यप्रवि-
श्यमुनिपुंगवः २७ सीतासहायोवाल्मीकिरितिप्राहचराघवम् इयंदाशरथेसीतासुव्रताधर्मचारि
णी २८

पथमित्यन्वयः सीतामितिपूर्वान्वयि १८ १९ २० २१ राघवस्यापिसविधंतद्वचऊचुरितिअन्वयः राजानोमुन
यइतिसंबोधने २२ सीतायाःशपथंदृष्ट्वातस्याःशुभाशुभंधर्माधर्मरूपंविजानंतुनिर्णयंतु २३ २४ २५ बाष्पकंठासैव २६ २७ २८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अपापाऽपिलोकापवादभीत्यात्यक्ता २९ सासीतामत्ययंविश्वासजनकंशपथंअत्रस्यानेऽस्मेरनिकरुणरसाक्रांतचित्ततयाइमाविनिप
दर्शानरुक्त्यंनदोषाय ३० तत्रादौभगवान्वाल्मीकिः स्वधर्मशपथैः सीतायाअदुष्टत्वंख्यापयति प्रचेतसइत्यादिना ३१ यथाद्ययावदनृत
मुक्तंनस्मरामितथा इमौतवपुत्रकाविति वाक्यमपिसत्यमेवेत्यर्थः ३२ ३३ प्रत्ययोविश्वासः ३४ महान्प्रत्ययजनकः शपथोऽग्निप्रवे-

अपापातेपुरात्यक्तामवाश्रमसमीपतः लोकापवादभीतेनत्वयाराममहावने २९ प्रत्ययंदास्यतेसीता
तदनुज्ञातुमर्हसि इमौतुसीतातनयोइमौयमलजानकौ ३० सुतौतुतवदुर्धर्षौतथ्यमेतद्ब्रवीमिते
प्रचेतसोऽहंदशमः पुत्रोरघुकुलोद्वह ३१ अनृतंनस्मराम्युक्तंयथेमौतवपुत्रकौ बहून्वर्षगणान्स
म्यक्तपश्चर्यामयाकृता ३२ नोपाश्नीयांफलंतस्यादुष्टेयंयदिमैथिली वाल्मीकिनैवमुक्तस्तुराघवः-
प्रत्यभाषत ३३ एवमेतन्महाप्राज्ञयथावदसिसुव्रत प्रत्ययोजनितोमह्यंतववाक्यैरकिल्बिषैः ३४
लंकायामपिदत्तोमेवैदेह्याप्रत्ययोमहान् देवानांपुरतस्तेनमंदिरेसंप्रवेशिता ३५ सेयंलोकभयाद्ब्र
ह्मन्नपापाऽपिसतीपुरा सीतामयापरित्यक्ताभवान्तत्क्षंतुमर्हसि ३६ ममैवजातौजानामिपुत्रावेतौ
कुशीलवौ शुद्धायांजगतीमध्येसीतायांप्रीतिरस्तुमे ३७ देवाःसर्वेपरिज्ञायरामाभिप्रायमुत्सुकाः
ब्रह्माणमग्रतः कृत्वासमाजग्मुः सहस्रशः ३८ प्रजाः समागमन्हृष्टाः सीताकौशेयवासिनी उदङ्
मुखीह्यधोदृष्टिः प्रांजलिर्वाक्यमब्रवीत् ३९ रामादन्यंयथाहंवैमनसाऽपिनचिंतये तथामेधरणीदे
वीविवरंदातुमर्हति ४० तथाशपंत्याःसीतायाःप्रादुरासीन्महाद्भुतम् भूतलाद्दिव्यमत्यर्थंसिंहासनम-
नुत्तमम् ४१ नागेंद्रैर्ध्रियमाणंचदिव्यदेहैरविप्रभम् भूदेवीजानकींदोर्भ्यांगृहीत्वास्नेहसंयुता ४२ स्वा
गतंतामुवाचैनांआसनेसन्यवेशयत् सिंहासनस्थांवैदेहींप्रविशंतींरसातलम् ४३

शरूपः ३५ लोकभयात्लोक
कृतदुर्वादभयात् ३६ जगतीमध्येतर्हिलोकमध्येशुद्धायांशपथेनसर्वलोकज्ञातशुद्धतायाम् ३७ ३८ ३९ विवरंप्रवेशायछिद्ररूपंमार्गं ४०
महाद्भुतमत्याश्चर्यंदिव्यंसिंहासनंप्रादुरासीत् ४१ सर्वाश्चर्यत्वदिव्यत्वोपपादकंरविप्रभमिति ४२ दोर्भ्यांगृहीत्वास्वागतमितितामुवाचाथैनामा
सनेसन्यवेशयत् ४३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

साधुवादश्च आसीदितिशेषः ४४ बहुधावाचः बहुप्रकारवाचः सीतेमैवंकर्तुमर्हाइतिराघवोगृहीतशपथोपिपुनःशपथग्रहणेप्रवृत्त
इत्येवंबहुप्रकारवाचः ४५ सीताशपथकारणात् बहुधावाचऊचुरित्यनुकर्षः तस्याश्चिंतापराः क्वसीतागमिष्यतीत्यादिचिंतायुक्ताः
ध्यानपरायणाः भूप्रविष्टसीतारूपस्यध्यानपरायणाः ४६ रामंनिरीक्षंतः किंकरिष्यतीत्याद्येवम् सीतांनिरीक्षंतः क्वयंगच्छत्येवेन्या
द्येवंप्रकारेणअचेतनमासीदितिशेषः ४७ भविष्यतः कार्यस्य गौरवंनिश्चयंज्ञात्वैवज्ञात्वाऽपि ४८ अजानन्निवशुशोचलोकव्यवहारात्तु

निरंतरापुष्पवृष्टिर्दिव्यासीतामवाकिरत् साधुवादश्चसुमहान्देवानांपरमाद्भुतः ४४ ऊचुश्चबहुधावाचो
अंतरिक्षगताःसुराः अंतरिक्षेचभूमौचसर्वेस्थावरजंगमाः ४५ वानराश्चमहाकायाःसीताशपथ
कारणात् केचिच्चिंतापरास्तस्याःकेचिद्ध्यानपरायणाः ४६ केचिद्रामंनिरीक्षंतःकेचित्सीतामचेत
सः मुहूर्तमात्रंतत्सर्वंतूष्णींभूतमचेतनम् ४७ सीताप्रवेशनंदृष्ट्वासर्वंसंमोहितंजगत् रामस्तुस
र्वंज्ञात्वैवभविष्यत्कार्यगौरवम् ४८ अजानन्निवदुःखेनशुशोचजनकात्मजाम् ब्रह्मणाऋषिभिः
सार्द्धंबोधितोरघुनंदनः ४९ प्रतिबुद्धइवस्वप्नात्चकारानंतराःक्रियाः विससर्जऋषीन्सर्वानृत्वि-
जोयेसमागताः ५० तान्सर्वान्धनरत्नाद्यैस्तोषयामासभूरिशः उपादायकुमारौतौअयोध्यामग
मत्प्रभुः ५१ तदादिनिस्पृहोरामःसर्वभोगेषुसर्वदा आत्मचिंतापरोनित्यमेकांतेसमुपस्थितः ५२
एकांतेध्याननिरतेएकदाराघवेसति ज्ञात्वानारायणंसाक्षात्कौसल्याप्रियवादिनी ५३ भक्त्याग
त्यप्रसंन्नंतंप्रणतामाहहृष्टधीः रामत्वंजगतामादिरादिमध्यांतवर्जितः ५४

सारेणेत्यर्थः बोधितःभाविनो
दुःपरिहारत्वादिकथाभिः कृतदुःखापनयनः ४९ ऋत्विजोयेइत्यत्रतान्विससर्जेत्यनुकर्षः ५० तान् ऋत्विक्प्रभृतीन् ५१ ए
कांतेसमुपस्थितः तत्रैवस्थितआसीत् ५२ ध्याननिरतेराघवेसतीत्यर्थः रामंतच्चरित्रैर्ऋषिवाक्यैश्च तत्कृपावशान्नारायणंज्ञा
त्वा ५३ प्रणतानारायणोऽयमितिबुद्ध्या आदिः कारणंस्वयंचोत्पत्तिनाशरहितस्तदभावादेवनमध्यवर्जितः ५२ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सर्वेषांपरमउत्कृष्टआत्मा अंतर्यामिविधयाप्रेरकत्वात्परानंदः हिरण्यगर्भानंदादपिउत्कृष्टोयआनंदस्तद्रूपः पूर्णः पुरुषः प्राप्तसर्वका
मत्वात्पूर्णः अतएवेश्वरः सर्वनियंताइदृशोपित्वंममगर्भरूपेगृहेमदीयपुण्याधिक्याज्जातोजातइव ५५ अवसानेत्वस्याअवसानका
लेतिवार्धकेइत्यर्थः त्वदवतारसमाप्तिकालेचसमयः प्रश्नावसरः अबोधजः अज्ञानजः कृत्स्नोननिवर्ततेसर्वदात्वत्संगात्किंचिच्छिन्न-
त्वो ऽपिसर्वथाननिवर्ततइतिभावः ५६ इदानीमपिअवसानकाले ऽपितथासंक्षेपतोबोधयेत्यन्वयः ५७ निर्वेदोविषयेष्वलंप्रत्ययस्तेन
वादिनीमीदृशवचनवक्त्रीम् ५८ श्रीन्मार्गानाह कर्मेत्यादि अभेदंबोध्यंज्ञानयोगस्त्रिधाएतज्जन्मानुष्ठितकर्मयोगसंपादितचित्तशु-
द्ध्याजातः एतज्जन्मानुष्ठितभक्तियोगकृतचित्तशुद्ध्याजातः पूर्वार्जिताभ्यामाभ्यांसंपादितयाएतज्जन्मनितदनुष्ठानानपेक्षोवेति अ

परमात्मापरानंदः पूर्णः पुरुषईश्वरः जातो ऽसिमेगर्भगृहेममपुण्यातिरेकतः ५५ अवसानेममाप्य
द्यसमयोप्यूद्धयूत्तम नाद्याप्यबोधजः कृत्स्नोभवबंधोनिवर्तते ५६ इदानीमपिमेज्ञानंभवबंध
निवर्तकम् यथासंक्षेपतोभूयात्तथाबोधयमांविभो ५७ निर्वेदवादिनीमेवंमातरंमातृवत्सलः दयालुःप्रा
हधर्मात्माजराजर्जरितांशुभाम् ५८ मार्गास्त्रयोमयाप्रोक्ताः पुरामोक्षाप्तिसाधकाः कर्मयोगोज्ञानयो-
गोभक्तियोगश्चशाश्वतः ५९ भक्तिर्विभिद्यतेमातस्त्रिविधागुणभेदतः स्वभावोयस्ययस्तेनतस्यभक्ति
र्विभिद्यते ६० यस्तुहिंसांसमुद्दिश्यदंभंमात्सर्यमेववा भेददृष्टिश्चसंरंभीभक्तोमेतामसः स्मृतः ६१ फलाभि
संधिर्भोगार्थीधनकामोयशस्तथा अर्चादौभेदबुद्ध्यामांपूजयेत्सतुराजसः ६२

न्यथाकेवलकर्मभक्तिभ्यांज्ञानंवि
नामोक्षस्यतमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेयनायेतिश्रुतिविरुद्धत्वायाथाश्रुतमूलासंगतिःस्यादितिदिक्तेषांमध्येभक्तियोग
रूपोमार्गोज्ञानजननेसुलभइत्यर्थः ५९ गुणभेदः तमोरजः सत्वरूपगुणभेदेनतामसीराजसीसात्विकीचेतित्रिधेत्यर्थः ६० भक्तिर्नैवि
ध्याद्भक्तस्यापित्रैविध्यंतत्रतामसंभक्तमाह यस्त्विति हिंसांशत्रोः दंभंपूजालाभादिफलंमात्सर्यंपरगुणद्वेषभेददृष्टिः अरिमित्रादिदृ
ष्टिः संरंभीतत्तद्विषयकाग्रहवान् ६१ फलंस्वर्गस्तदभिसंधिस्तत्कामः भोगऐहिकः यशइत्यस्ययशः कामइत्यर्थः गोबलीवर्द-
न्यायेनपृथग्निर्देशः आर्चादौप्रतिमादौआदिनास्थंडिलादिपूजास्थानसंग्रहः भेदबुद्ध्याअयमुपास्योहमुपासकइत्येवंरूपया ६२



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यानिर्हरणायपापनाशायकर्ममत्पूजनरूपंपरस्मिन्मयिअर्पितंकुर्याद्भगवतःप्रेरणायायदस्वतंत्रेणमयाकृतंतेनसएवतुष्यत्विति बुद्धिर्ब्र
ह्मार्पणंनाम अथवाशास्त्रबोधितत्वादवश्यकर्तव्यमितिबुद्ध्यावायःकुर्यात्ससात्विकः अत्रापिभेदबुद्ध्येत्युपादानादभेदबुद्धिरेतत्फल
मितिसूचितम् ६३ एतत्फलीभूतंनिर्गुणभक्तियोगलक्षणमाह मद्गुणेति अविच्छिन्नामनोवृत्तिरित्यंतेनअनंतगुणालयेमयियाअवि
च्छिन्नामनोवृत्तिरेतत्सगुणध्यानस्यनिर्गुणध्यानस्यलक्षणंप्रापकम् तत्रदृष्टांतः यथागंगांबुनोंबुधौइतिअनेनाभेदविषयत्वंमनोवृ
त्तेर्दर्शितम् ६४ अहैतुक्यंफलानुद्देशः अतएवाव्यवहिताविशेषेणावहितासंबद्धासार्ष्टिःसारूप्यम् ६५ उक्तफलानिददात्यपिपरंतु-

परस्मिन्नर्पितंयस्तुकर्मनिर्हरणायवा कर्तव्यमितिवाकुर्याद्भेदबुद्ध्याससात्विकः ६३ मद्गुणश्रयणादेव
मय्यनंतगुणालये अविच्छिन्नामनोवृत्तिर्यथागंगांबुनोंबुधौ ६४ तदेवभक्तियोगस्यलक्षणंनिर्गुणस्य
हि ६४ अहैतुक्यव्यवहितायाभक्तिर्मयिजायते सामेसालोक्यसामीप्यसार्ष्टिसायुज्यमेववा ६५ द
दात्यपिनगृण्हंतिभक्तामत्सेवनंविना सएवात्यंतिकोयोगोभक्तिमार्गस्यभामिनि ६६ मद्भावंप्राप्नुया
त्तेनअतिक्रम्यगुणत्रयम् महताकामहीनेनस्वधर्माचरणेनच ६७ कर्मयोगेनशस्तेनवर्जितेनविहिं-
सनम् मद्दर्शनस्तुतिमहापूजाभिःस्मृतिवंदनैः ६८ भूतेषुमद्भावनयासंगेनासत्यवर्जनैः बहुमानेन
महतांदुःखिनामनुकंपया ६९ स्वसमानेषुमैत्र्याचयमादीनांनिषेवया वेदांतवाक्यश्रवणान्ममनामा
नुकीर्तनात् ७० सत्संगेनार्जवेनैवह्यहमःपरिवर्जनात् कांक्षयाममधर्मस्यपरिशुद्धांतरोजनः ७१

भक्तामत्सेवनंविनातेषुमत्सेवायाअभावात् तानिनगृण्हंतिनांगीकुर्वंति सएवसालोक्यादितिरस्कारएवआत्यंतिकोयोगः सएवपूर्णोभक्ति
योमत्सेवारहितंमोक्षमपिनबहुमन्यतेइति ६६ तेनभक्तियोगेनगुणत्रयंतद्रूपांमायामतिक्रम्यमद्भावंमदैक्यंप्राप्नुयात् अथकर्मयोगमाह
महतेति कामहीनेनफलोद्देशहीनेनस्वधर्मोनित्यनैमित्तिकरूपः ६७ तादृशकर्मयोगेनमद्भावंप्राप्नुयात् कथंभूतेनविहिंसनंहिंसावर्जितं
नहिंसारहितेनेतियावत् उक्तभक्तियोगमाप्त्युपायमाह मद्दर्शनेतिस्मृतिःस्मरणंवंदनंप्रणतिः ६८ सर्वभूतेषुमद्भावनयाईश्वरभावनयाअ
संगेनदुष्टसंगपरित्यागेन ६९ यमादयोयमनियमप्राणायामादयः ७० अहमः अहंकृतेः अहंकर्तेत्यादिबुद्धेः ममधर्मस्यमत्पूजादिरूपस्यकांक्ष
याइच्छया ७१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अंजसाशीघ्रमायातिमदभिन्नोभवतिस्वाश्रयात्वायुनास्वाश्रयापकर्षणात् ७२ अहमात्माव्यवस्थितः सर्वभूचेतनोऽहमेवेत्यर्थः ७३ तंसर्वत्रचैतन्यसंपादकंमामज्ञात्वाबहिःक्रियोत्पन्नैरनेकभेदैर्द्रव्यैर्गंधपुष्पधूपादिभिर्हेअंबमेतोषणंसंतोषंनकुरुतेनजनयति इत्यर्थः सर्वभूतस्थितत्वेनमामज्ञात्वाकृतयापूजयामोक्षफलदोममसंतोषोनेत्यर्थः ७४ सर्वप्राण्यपमानकर्त्रायावत्प्रतिमानपूजितातावदेवविशिष्टानांसापूजायोग्यातदनंतरंनतत्पूजेत्यर्थः अर्चितइत्यस्यव्याख्यापूजितइति ७५ तावन्मामर्चयेदित्यर्थंमध्यमणिन्याप्नेनोत्तरान्वय्यपि यावत्सर्वभूतस्थितंमामात्मनिनस्मरेत् सएवाहमितिनजानीयात् तावदेवपूजादावधिकारोनतदुत्तरंपूज्यपूजकभावापग

मद्गुणश्रवणादेवयातिमामंजसाजनः यथावायुवशाद्गंधःस्वाश्रयाद्घ्राणमाविशेत् ७२ योगाभ्यासरतंचित्तमेवमात्मानमाविशेत् सर्वेषुप्राणिजातेषुह्यहमात्माव्यवस्थितः ७३ तमज्ञात्वाविमूढात्माकुरुतेकेवलंबहिः क्रियोत्पन्नैरनेकभेदैर्द्रव्यैर्मेनांबतोषणम् ७४ भूतावमानिनार्चायामर्चितोहंनपूजितः ७५ तावन्मामर्चयेद्देवंप्रतिमादौस्वकर्मभिः यावत्सर्वेषुभूतेषुस्थितंचात्मनिनस्मरेत् ७६ यस्तुभेदंप्रकुरुतेस्वात्मनश्चपरस्यच भिन्नदृष्टेर्भयंमृत्युस्तस्यकुर्यान्नसंशयः ७७ मामतःसर्वभूतेषुपरिच्छिन्नेषुसंस्थितम् एकंज्ञानेनमानेनमैत्र्याचार्चेदभिन्नधीः ७८ चेतसैवानिशंसर्वभूतानिप्रणमेत्सुधीः ज्ञात्वामांचेतनंशुद्धंजीवरूपेणसंस्थितम् ७९ तस्मात्कदाचिन्नेक्षेतभेदमीश्वरजीवयोः भक्तियोगोज्ञानयोगोमयामातरुदीरितः ८० आलंब्यैकतरंवापिपुरुषःशममृच्छति ततोमांभक्तियोगेनमातःसर्वहृदिस्थितम् ८१

मादितिभावः इयमेवभावनामुख्येतिध्वनयितुंभेदंनिंदति यस्त्विति भिन्नदृष्टेस्तस्यमृत्युःभयंकुर्यात्अत्रसंशयोनास्तीत्यर्थः ७६ तस्माद्भेदंत्यक्त्वैवाहमुपास्यइत्याह मामतइति एकंमांज्ञानेनमानेनएवंज्ञानपूर्वकंसर्वप्राणिसंमाननेनमैत्र्यासर्वत्रमित्रबुद्ध्यामामर्चेत् इतीयमेवमेमुख्यापूजाक्वापिशत्रुबुद्धिःसर्वथानकार्येतिभावः अभिन्नधीःएकएवचेतनोभगवान्सर्वत्रेत्येवंबुद्धिरित्यर्थः ७८ तथासर्वभूतानिचेतसाप्रणमेत् तत्रहेतुर्ज्ञात्वेति ७९ ईश्वरजीवयोरितिपरस्परजीवानांचेत्यपिबोध्यम् ज्ञानयोगोभक्तियोगसहितोज्ञानयोगइत्यर्थः ८० एकतरंकेवलभक्तियोगमपीत्यर्थः शममृच्छतितस्यपरिणामेज्ञानयोगप्रापकत्वादितिभावः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भक्तियोगेनउत्कृष्टोयमीश्वरः पूज्यइत्येवंरूपेणतत्रासामर्थ्ये आह पुत्ररूपेणवेति ॰२ तिस्रोगतीः सात्विकराजसतामसीः तत्रसात्विकी अ
र्चिरादिगतिः राजसी धूमादिगतिस्तामसीजायस्वम्रियस्वेत्येवंरूपा तत्राद्यादहराद्युपासकानांद्वितीयाकर्मिणांतृतीयान्येषांपरमांगतिम् ना
स्यप्राणाद्युत्क्रामंत्यत्रैव समवलीयंतइतिज्ञानिप्राप्याम् ॰३ पूर्वमेवचित्रकूटगिरौ ॰४ इतिश्रीमत्सकलरा॰ उत्तरकांडेमातृणांस्व

पुत्ररूपेणवानित्यंस्मृत्वाशांतिमवाप्स्यसि श्रुत्वारामस्यवचनंकौसल्यानंदसंयुता ॰२ रामंसदाहृ
दिध्यात्वाछित्वासंसारबंधनम् अतिक्रम्यगतीस्तिस्रोप्यवापपरमांगतिम् ॰३ कैकेयीचापियोगंर
घुपतिगदितंपूर्वमेवाधिगम्यश्रद्धाभक्तिप्रशांताहृदिरघुतिलकंभावयंतीगतासूः गत्वास्वर्गंस्फुरंती
दशरथसहितामोदमानावतस्थेमाताश्रीलक्ष्मणस्याप्यतिविमलमतिः प्रापभर्तुः समीपम् ॰४
इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेमातृणांस्वर्गप्रस्थानंनामसप्तमः सर्गः
७ श्रीमहादेवउवाच अथकालेगतेकस्मिन्भरतोभीमविक्रमः युधाजितामातुलेन-
ह्याहूतोः गात्ससैनिकः १ रामाज्ञयागतस्तत्रहत्वागंधर्वनायकान् तिस्रः कोटीः पुरेद्वेतुनिवेश्यरघु
नंदनः २ पुष्करंपुष्करावत्यांतक्षंतक्षशिलाह्वये अभिषिच्यसुतौतत्रधनधान्यसुहृद्वृतौ ३ पुन
रागत्यभरतोरामसेवापरोभवत् ततः प्रीतोरघुश्रेष्ठोलक्ष्मणंप्राहसादरम् ४ उभौकुमारौसौमित्रेगृ
हीत्वापश्चिमांदिशम् तत्रभिल्लान्विनिर्जित्यदुष्टान्सर्वापकारिणः ५ अंगदश्चित्रकेतुश्चमहासत्वप
राक्रमौ द्वयोर्द्वेनगरेकृत्वागजाश्वधनरत्नकैः ६ अभिषिच्यसुतौतत्रशीघ्रमागच्छमांपुनः राम-
स्याज्ञांपुरस्कृत्यगजाश्वबलवाहनः ७ गत्वाहत्वारिपून्सर्वान्स्थापयित्वाकुमारकौ सौमित्रिः पु
नरागत्यरामसेवापरोऽभवत् ८

र्गप्रस्थानंनामसप्तमः सर्गः ७ अथेति कस्मिन् कस्मिंश्चिद्दिवसे युधाजिता
मातुलेनाहूतः स्वदेशसमीपवर्तिगंधर्वविषयस्थगंधर्ववधार्थम् १ तिस्रः कोटीर्गंधर्वनायकान्हत्वेत्यन्वयः पुरेपुष्कराव
तीतक्षशिलाख्ये २ सुतौपुष्करतक्षनामानौ ३ ४ कुमारौस्वपुत्रौ पश्चिमांदिशंयाहीतिशेषः ५ ६ ७ ८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततः समागमनानन्तरम् ९ अतिबलस्य महर्षिमुख्यस्य दूतं मां पुरुषोत्तमाय निवेदयस्व यस्याहं दूतस्तस्य महर्षिमुख्यस्य रामाय चिराय वि ज्ञापनमस्ति रामं प्रति चिरकालं बोधनीयं वाक्यमस्ति १० सौमित्रिरित्यन्वयः ११ १२ १३ वर्धस्वेत्यस्य भूराज्याधिकस्वर्गराज्यलाभे न वर्धस्वेति तत्स्थदयस्थितोऽर्थः १४ तेनानामयं पृष्टो रामो तस्मै अनामयं पृष्ट्वा प्रोवाचेत्यन्वयः १५ यदर्थं यत्प्रापणार्थं तत्स्वस्वामिवाक्यम्

ततस्तु काले महति प्रयाते रामं सदा धर्मपथे स्थितं हरिम् द्रष्टुं समागादृषिवेषधारी कालस्ततो लक्ष्मणमि त्युवाच ९ निवेदयस्वातिबलस्य दूतं मां द्रष्टुकामं पुरुषोत्तमाय रामाय विज्ञापनमस्ति तस्य महर्षिमु ख्यस्य चिराय धीमन् १० तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः आचचक्षेऽथ रामाय स संप्राप्तं तपो धनम् ११ एवं ब्रुवन्तं प्रोवाच लक्ष्मणं राघवो वचः शीघ्रं प्रवेशय तं तात मुनिः सत्कारपूर्वकम् १२ लक्ष्म णस्तु तथेत्युक्त्वा प्रावेशयत तापसम् स्वतेजसा ज्वलन्तं तं घृतसिक्तं यथाऽनलम् १३ सोऽभिगम्य र घुश्रेष्ठं दीप्यमानः स्वतेजसा मुनिर्मधुरवाक्येन वर्धस्वेत्याह राघवम् १४ तस्मै स मुनये रामः पूजां कृ त्वा यथाविधि पृष्ट्वानामयमव्यग्रो रामः पृष्टोऽथ तेन सः १५ दिव्यासने समासीनो रामः प्रोवाच तापस म् यदर्थमागतोऽसि त्वमिह तत्प्रापयस्व मे १६ वाक्येन चोदितस्तेन रामेणाह मुनिर्वचः द्वंद्वमेव प्र योक्तव्यमनालक्ष्यं तु तद्वचः १७ नान्येन चैतच्छ्रोतव्यं नाख्यातव्यं च कस्यचित् शृणुयाद्वा निरीक्षेद्वा यः स वध्यस्त्वया भवेत् १८ तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् निष्पलं द्वारि सौमित्रे नायात्वत्र जनो रहः १९ यद्यागच्छति कोवापि स वध्यो मे न संशयः ततः प्राह मुनिं रामो येन वा त्वं विसर्जितः २० यत्ते मनीषितं वाक्यं तद्वदस्व ममाग्रतः ततः प्राह मुनिर्वाक्यं शृणु राम यथातथम् २१

१६ द्वंद्वमेव रहस्यमेव अनालक्ष्यं तृतीयेनेति शेषः १७ तदेव स्पष्टयति नान्येति निरीक्षेद्वा कथयन्तावावामिति शेषः १८ अत्र रहः रहस्थाने जन आवाभ्यामतिरिक्तस्तृतीयो जन इत्यर्थः १९ कोवाऽपि त्वं वा अन्यो वा येन त्वं विसर्जितः प्रेषितस्तस्य वा मनीषितं अथवा ते तवैव मनीषितं यद्वाक्यं तद्वदस्व २० यथातथं सत्यमि त्यर्थः २१



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वंकइतिजिज्ञासांसंभाव्यस्वयमेवोत्तरमाहाहंहीतिपूर्वजः सर्वसृष्ट्यपेक्षयापूर्वः महत्तत्वस्यैवायमंशविशेषइत्याह अतिरिक्तमेवेदंतत्वमिति शैवाः २२ मायासंगमस्तदीक्षणमात्रम् २३ अथब्रह्मवाक्यमाह रक्षितुमितिसमयः अवतारसमयेकृतः कालः एतावंतंकालंभूलोकेस्थित्वा पुनःस्वर्गमागंतेत्येवंरूपः ननुममस्वर्गेणकः संबंधइत्याशंकांनिवर्तयितुंपूर्वकथामाह पुरेति सदेवसौम्येदमग्रआसीदितिश्रुतेः माया१ पिकार्याक्षमत्त्वात्त्वदभेदेनैवतदेतिभाव २४ भार्ययामायया भवत्सान्निध्येनतस्याअप्येवंपरिणामशीलत्वादितिभावः भोगवतंशेषंतुष-

ब्रह्मणाप्रेषितोस्मीशकार्यार्थेनेंऽतिकंप्रभो अहंहिपूर्वजोदेवतवपुत्रःपरंतप २२ मायासंगमजोवीरका लःसर्वहरःस्मृतः ब्रह्मात्वामाह भगवान्सर्वदेवर्षिपूजितः २३ रक्षितुंस्वर्गलोकस्यसमयस्तेमहामते पुरात्वमेकएवासील्लोकान्संहृत्यमायया २४ भार्ययासहितस्त्वंमामादौपुत्रमजीजनः तथाभोगवतं- नागमनंतमुदकेशयम् २५ माययाजनयित्वात्वंद्वौससत्वौमहाबलौ मधुकैटभकौदैत्यौहत्वामेदोस्थि संचयम् २६ इमांपर्वतसंबद्धांमेदिनींपुरुषर्षभ पद्मेदिव्यार्कसंकाशेनाभ्यामुत्पाद्यमामपि २७ मां- विधायप्रजाध्यक्षंमयिसर्वंन्यवेदयत् सोऽहंसंयुक्तसंभारस्त्वामवोचंजगत्पते २८ रक्षांविधत्स्वभूते भ्योयेमेवीर्यापहारिणः ततस्त्वंकश्यपाज्जातोविष्णुर्वामनरूपधृक् २९ हतवानसिभूभारंवधाद्रक्षो गणस्यच सर्वांस्तूत्सार्यमाणास्तुप्रजास्तुधरणीधर ३० रावणस्यवधाकांक्षीमर्त्यलोकमुपागतः दशव र्षसहस्राणिदशवर्षशतानिच ३१ कृत्वावासस्यसमयंत्रिदशेष्वात्मनःपुरा सतेमनोरथःपूर्णःपूर्णेचा युषितेनृषु ३२ कालस्तापसरूपेणत्वत्समीपमुपागमं ततोभूयश्चतेबुद्धिर्यदिराज्यमुपासितुम् ३३ भावआर्षः

एतावुभावपिमहत्तत्वाधिष्ठातारावित्याहुः २५ ससत्वौसपराक्रमौतन्मेदोस्थिसंचयंतद्रूपाम् २६ इमांमेदिनींनिर्मितवानितिशेषः ततस्तस्यना भ्यांविद्यमानेपद्मेमामुत्पाद्य २७ तंचमांप्रजाध्यक्षंविधाय भवान् मयिसर्वंप्रजोत्पादनपालनादिभारंन्यवेदयत् स्थापितवान् संयुक्तसंभारःअं गीकृतप्रजोत्पादनादिव्यवहारः २८ मेवीर्यापहारिणःमेवीर्यस्यमत्प्रजानांदुःखदाइत्यर्थः ततःमांप्रतितथाप्रतिज्ञानोत्तरमित्यर्थः २९ ३१ समयंवास कालप्रतिज्ञांमनोरथःप्रतिज्ञाविषयःकालः नृषुलोके आयुषिपूर्णेसति ३२ अहंकालस्तापसरूपेणत्वत्समीपमुपागमंप्राप्तवानस्मि ३३

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तत्तथाभवराज्यमुपास्स्वेत्यर्थः ३४ ३५ कृत्स्नस्यजगतोंतकंनाशकंकालमित्यर्थः ३६ कार्यार्थेसंभवः तेननिष्पन्नंकार्यस्यावस्थानेनप्रयोजनमित्यर्थः ३७ मनोरथः अयमेवमेमनोरथोयदितोगमनमितिभावः ३८ स्थातव्यंतद्रक्षणायोद्युक्तेनभाव्यंमाययेत्यनेनसर्वमिदंमाये



तत्तथाभव भद्रंतेएवमाहपितामहः यदितेगमनेबुद्धिर्देवलोकंजितेंद्रिय ३४ सनाथाविष्णुनादेवाभवंतुविगतज्वराः चतुर्मुखस्यतद्वाक्यंश्रुत्वाकालेनभाषितम् ३५ हसन्रामस्तदावाक्यंकृत्स्नस्यांतकमब्रवीत् श्रुतंतवचवचोमेऽद्यममापीष्टतरंतुतत् ३६ संतोषःपरमोज्ञेयस्त्वदागमनकारणात् त्रयाणामपिलोकानांकार्यार्थंममसंभवः ३७ भद्रंतेस्तुगमिष्यामियतएवाहमागतः मनोरथस्तुसंप्राप्तोनमेऽत्रास्तिविचारणा ३८ मत्सेवकानांदेवानांसर्वकार्येषुवैमया स्थातव्यंमाययापुत्रयथाचाहप्रजापतिः ३९ एवंतयोःकथयतोर्दुर्वासामुनिरभ्यगात् राजद्वारंराघवस्यदर्शनापेक्षयाद्दृतम् ४० मुनिर्लक्ष्मणमासाद्यदुर्वासावाक्यमब्रवीत् शीघ्रंदर्शयरामंमेकार्यंमेऽत्यंतमाहितम् ४१ तच्छ्रुत्वाप्राहसौमित्रिर्मुनिंज्वलनतेजसम् रामेणकार्यंकिंतेऽद्यकिंतेऽभीष्टंकरोम्यहम् ४२ राजाकार्यांतरेव्यग्रोमुहूर्तंसंप्रतीक्ष्यताम् तच्छ्रुत्वाक्रोधसंतप्तोमुनिःसौमित्रिमब्रवीत् ४३ अस्मिन्क्षणेतुसौमित्रेनदर्शयसिचेद्दृढम् रामंसविषयंवंशंभस्मीकुर्यान्नसंशयः ४४ श्रुत्वातद्वचनंघोरमृषेर्दुर्वाससोभृशम् स्वरूपंतस्यवाक्यस्यचिंतयित्वासलक्ष्मणः ४५ सर्वनाशाद्वरंमेऽद्यनाशोह्येकस्यकारणात् निश्चित्यैवंततोगत्वारामायप्राहलक्ष्मणः ४६ सौमित्रेर्वचनंश्रुत्वारामःकालंव्यसर्जयत् शीघ्रंनिर्गम्यरामोऽपिददर्शात्रेःसुतंमुनिम् ४७

वैतिध्वनयति ३९ आदृतंयथाभवतितथादर्शनेच्छयाराजद्वारमभ्यगात् ४० ४१ रामेणकार्यंकिंतेइतितत्सर्वंकार्यमहंसंपादयामीतिभावः तदेवाह किंतेइत्यादि ४२ ४३ वंशंदशरथस्येतिशेषः तेनसर्वेषांभवदादीनांनाशंकरिष्यामीत्यर्थः ४४ भृशमतिशयेनघोरमित्यन्वयः स्वरूपंवाच्यंव्यंग्यमन्यार्थम् ४५ कारणाद्दुर्वासोरूपात् ४६ ४७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४८ वर्षसहस्राणांसंबंधीयउपवासस्तस्यसमापनंसमासआर्षः ४९ यत्सिद्धंगृहेऽस्तितद्भोजनमिच्छामि ५० अमृतममृतवत्स्वादु ५१ का
लेनभाषितमित्यन्वयः स्मृत्वाचशोकादियुक्तःसन् ५२ मनसाहतप्रायंज्ञात्वाप्रतिज्ञाया अन्यथाकर्तुमशक्यत्वादितिभावः ५३ ५४ स्ने

रामोऽभिवाद्यसंप्रीतोमुनिंपप्रच्छसादरम् किंकार्यंतेकरोमीतिमुनिमाहरघूत्तमः ४८ तच्छ्रुत्वारामवच
नंदुर्वासारामब्रवीत् अद्यवर्षसहस्राणामुपवाससमापनम् ४९ अतोभोजनमिच्छामि सिद्धंयत्तेर-
घूत्तम रामोमुनिवचःश्रुत्वासंतोषेणसमन्वितः ५० ससिद्धमन्नंमुनयेयथावत्समुपाहरत् मुनिर्भुक्त्वा
न्नममृतंसंतुष्टःपुनरभ्यगात् ५१ स्वमाश्रमंगतेतस्मिन्रामःसस्मारभाषितम् कालेनशोकदुःखार्तो
विमनाश्चातिविह्वलः ५२ अवाङ्मुखोदीनमनानशशाकाभिभाषितुम् मनसालक्ष्मणंज्ञात्वाहतप्रायं
रघूद्वहः ५३ अवाङ्मुखोबभूवाथतूष्णीमेवाखिलेश्वरः ततोरामंविलोक्याहसौमित्रिर्दुःखसंप्लुतम्
५४ तूष्णींभूतंचिंतयंतंगर्हेतंस्नेहबंधनम् मत्कृतेत्यजसंतापंजहिमांरघुनंदन ५५ गतिःकालस्यकलि
तापूर्वमेवेदृशीप्रभो त्वयिहीनप्रतिज्ञेतुनरकोमेध्रुवंभवेत् ५६ मयिप्रीतिर्यदिभवेद्यद्यनुग्राह्यतातव
त्यक्त्वाशंकांजहिप्राज्ञमामाधर्मंत्यजप्रभो ५७ सौमित्रिणोक्तंतच्छ्रुत्वारामश्चलितमानसः आहूयमं-
त्रिणःसर्वान्वसिष्ठंचेदमब्रवीत् ५८ मुनेरागमनंयच्चकालस्यापिहिभाषितम् प्रतिज्ञामात्मनश्चैवसर्व
मावेदयत्प्रभुः ५९ श्रुत्वारामस्यवचनंमंत्रिणःसपुरोहिताः ऊचुःप्रांजलयःसर्वेराममक्लिष्ट
कारिणम् ६०

हकृतंबंधनंगर्हंतंनिंदंतंस्नेहाद्धर्येशक्तत्वात्तदकरणेचप्रतिज्ञाहानिरितिचिंतयंतम् ५५ पूर्वमेवेदृशीतिइदमवश्यंभावीतिभावः मत्कृते-
त्वत्प्रतिज्ञाहानौममापिनरकइत्यर्थः ५६ धर्ममात्यजेत्यन्वयः अनेनप्रतिज्ञापालनमेवंक्षत्रियस्यमुख्योधर्मस्तद्विधेयानांचतत्प्रतिज्ञा
निर्वाहणंपरमोधर्मइतिचसूचितम् ५७ चलितमानसस्त्यक्तभ्रातृस्नेहः ५८ मुनेर्दुर्वाससः ५९ ६०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भूभारहारिणस्तावन्मात्रफलकतयाधृतशरीरस्यतवपूर्वंत्वत्तःपूर्वमित्यर्थः लक्ष्मणगमनंनिर्दिष्टंभाविसत्वर्थोऽस्याभिर्ज्ञातएवास्ते -
६१ प्रतिज्ञानेथैंपरित्यक्तेअन्यथाकृते ६२ धर्मेनष्टेराज्ञइतिशेषः तवत्रैलोक्यपालकत्वेनत्वद्धर्मनाशेसंपूर्णत्रैलोक्यनाशइतिभावः -
६३ ६४ समाश्रुत्य ६५ वसिष्ठादिवाक्यंश्रुत्वेत्यर्थः सतामुभयंसममेवेत्यन्वयः उक्तेउक्तवतीत्यर्थः ६६ ६७ नवद्वाराणिचक्षुषीकर्णौ

पूर्वमेवहिनिर्दिष्टंतवभूभारहारिणः लक्ष्मणेनवियोगस्तेज्ञातोविज्ञानचक्षुषा ६१ त्यजाशुलक्ष्मणंराम
माप्रतिज्ञांत्यजप्रभो प्रतिज्ञानेपरित्यक्तेधर्मोभवतिनिःफलः ६२ धर्मेनष्टेऽखिलंरामत्रैलोक्यंनश्यतिध्रु
वम् त्वंतुसर्वस्यलोकस्यपालकोऽसिरघूत्तम ६३ त्यक्त्वालक्ष्मणमेवैकंत्रैलोक्यंत्रातुमर्हसि रामोध
र्मार्थसहितंवाक्यंतेषामनिंदितम् ६४ सभामध्येसमाश्रुत्यप्राहसौमित्रिमंजसा यथेष्टंगच्छसौमित्रे
माभूद्धर्मस्यसंक्षयः ६५ परित्यागोवधोवापिसतामेवोभयंसमम् एवमुक्तेरघुश्रेष्ठेदुःखव्याकुलितेक्षणः ६६ रामंप्रणम्यसौमित्रिःशीघ्रंगृहमगात्स्वकम् ततोऽगात्सरयूतीरमाचम्यसकृतांजलिः ६७ न
वद्वाराणिसंयम्यमूर्ध्निप्राणमधारयत् यदक्षरंपरंब्रह्मवासुदेवाख्यमव्ययम् ६८ पदंतत्परसंधाम-
चेतसासोऽभ्यचिंतयत् वायुरोधेनसंयुक्तंसर्वेदेवाःसहर्षयः ६९ साग्नयोलक्ष्मणंपुष्पैस्तुष्टुवुश्चसमा
किरन् अदृश्यंविबुधैःकैश्चित्सशरीरंसवासवः ७० गृहीत्वालक्ष्मणंशक्रःस्वर्गलोकमथागमत् त-
तोविष्णोश्चतुर्भागंतंदेवंसुरसत्तमाः सर्वेदेवर्षयोदृष्ट्वालक्ष्मणंसमपूजयन् ७१ लक्ष्मणेहिदिवमा
गतेहरौसिद्धलोकगतयोगिनस्तदा ब्रह्मणासहसमागमन्मुदाद्रष्टुमाहितमहाहिरूपकम् ७२ इ
तिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेअष्टमः सर्गः समाप्तः ८ श्रीरामः

नासिकामुखंपायूपस्थेब्रह्मरंध्रंचेति ६८ अभ्यचिंतयत् वासुदेवोऽहमित्यध्यायत ६९ तुष्टुवुः पुष्पैःसमाकिरंश्चविबुधैःकैश्चि
दृश्यंकैरपिदेवैर्नदृश्यमित्यर्थः ७० ७१ हरौहर्यंशेसिद्धलोकगतयोगिनः तल्लोकस्ययोगिनइत्यर्थः आहितंप्राप्तंमहाऽहिरूपंयेन
तम् दुग्धंयथादधिभावमापद्यतेतथाऽयमेवदेहस्तत्राहिरूपतांप्राप्तइत्यर्थः ७२ इतिश्रीम॰ उत्तरकांडेअष्टमः सर्गः ८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नैगमावणिजः १ अद्यचाहमित्यर्थः पदानुगः पदान्यनुलक्षीकृत्यगंता अन्यथानेनबहुव्यवधानंस्यादित्यर्थः २ उक्तेउक्तवतिसति ३ भरतोवा ऽपिभरतश्चापीत्यर्थः राज्यंगर्हयामास तन्निंदापूर्वकमिदंप्राहचेत्यर्थः ४ सत्येनशपेसत्यंमेनश्यतुयदि राज्याकांक्षेत्येकः शपथः त्वत्पादयो-

श्रीमहादेवउवाच लक्ष्मणंतुपरित्यज्यरामोदुःखसमन्वितः मंत्रिणोनैगमांश्चैववसिष्ठंचेदमब्रवीत् १ अभिषेक्ष्याभिभरतमधिराज्येमहामतिम् अद्यचाहंगमिष्यामिलक्ष्मणस्यपदानुगः २ एवमुक्तेर घुश्रेष्ठेपौरजानपदास्तदा द्रुमाइवछिन्नमूलादुःखार्ताःपतिताभुवि ३ मूर्च्छितोभरतोवाऽपिश्रुत्वा-रामाभिभाषितम् गर्हयामासराज्यंसप्राहेदंरामसन्निधौ ४ सत्येनचशपेनाहंत्वांविनादिविवाभुवि कांक्षेराज्यंरघुश्रेष्ठशपेत्वत्पादयोःप्रभो ५ इमौकुशलवौराजन्नभिषिंचस्वराघव कोसलेषुकुशंवीरमु त्तरेषुलवंतथा ६ गच्छंतुदूतास्त्वरितंशत्रुघ्नानयनायहि अस्माकमेनद्गमनंस्ववासायश्रृणोतुसः ७ भ रतेनोदितंश्रुत्वापतितास्ताःसमीक्ष्यतम् प्रजाश्चभयसंविग्नारामविश्लेषकातराः ८ वसिष्ठोभग-वान्रामसुवाचसदयंवचः पश्यतातादरात्सर्वाःपतिताभूतलेप्रजाः ९ तासांभावानुगंरामप्रसादं कर्तुमर्हसि श्रुत्वावसिष्ठवचनंताःसमुत्थाप्यपूज्यच १० सस्नेहोरघुनाथस्ताःकिंकरोमीतिचाब्रवीत् ततःप्रांजलयःप्रोचुःप्रजाभक्त्यारघूद्वहम् ११ गंतुमिच्छसियत्रत्वमनुगच्छामहेवयम् अस्माकमे षापरमाप्रीतिर्धर्मोयमक्षयः १२ तवानुगमनेरामहृद्गतानोदृढामतिः पुत्रदारादिभिःसार्धमनुयामो ऽद्यसर्वथा १३ तपोवनंवास्वर्गंवापुरंवारघुनंदन ज्ञात्वातेषांमनोदार्ढ्यंकालस्यवचनंयथा १४ भ क्तंपौरजनंचैवबाढमित्याहराघवः कृत्वैवंनिश्चितंरामस्तस्मिन्नेवाहनिप्रभुः १५ प्रस्थापयामासचतौ रामभद्रःकुशीलवौ अष्टौरथसहस्राणिसहस्रंचैवदंतिनाम् १६

त्वशपेत्वत्पादयोःस्पर्शेनचश पथइत्यपरःशपथः ५तर्हिसर्वगमनेकोराज्यंपालयिष्यतीत्याशंक्याहेमाविति ६७ तंतथाकृठोरंवदंनंपतिताभुवीतिशेषः ८ तातेतिसंबोधनम् ९ भावानुगं अभिप्रायानुगंपूज्येतिल्यबार्षः १० ११ अयंत्वदनुगमनरूपः १२ १३ तपोवनाद्यन्यतमंयद्गंतासितदनुयामइत्यर्थः १४ १५ १६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अ॰रा॰टी॰ ३० | उ॰कां॰

१७ कृच्छ्रेणभगवद्वियोगजदुःखासहिष्णुतयाक्लेशेन १८ अत्रिपुत्रस्यदुर्वाससःप्रतिज्ञांप्रजांसहनयनविषयाम् १९ चिकीर्षितंस्वगमनरूपंकुलस्यक्रमात्समूहस्यनाशनम् २० २१ २२ अक्षयैर्ऋषिभिः अतश्चिरजीविभिर्वसिष्ठाद्यैः २३ २४ २५ २६ २७ २८

षष्टिंचाश्वसहस्राणामेकैकस्मैददौबलम् बहुरत्नौबहुधनौहृष्टपुष्टजनावृतौ १७ अभिवाद्यगतौरामं
कृच्छ्रेणतुकुशीलवौ शत्रुघ्नानयनेदूतान्प्रेषयामासराघवः तेदूतास्त्वरितंगत्वाशत्रुघ्नायन्यवेदयन्
१८ कालस्यागमनंपश्चादत्रिपुत्रस्यचेष्टितम् लक्ष्मणस्यचनिर्याणंप्रतिज्ञांराघवस्यच १९ पुत्राभिषे
चनंचैवसर्वंरामचिकीर्षितम् श्रुत्वातद्दूतवचनंशत्रुघ्नःकुलनाशनम् २० व्यथितोऽपिधृतिंलब्ध्वापु-
त्रावाहूयसत्वरः अभिषिच्यसुबाहुंवैमथुरायांमहाबलः २१ यूपकेतुंचविदिशानगरेशत्रुसूदनः अ
योध्यांत्वरितंप्रागात्स्वयंरामदिदृक्षया २२ ददर्शचमहात्मानंतेजसाज्वलनप्रभम् दुकूलयुगसंवीतं
ऋषिभिश्चाक्षयैर्वृतं २३ अभिवाद्यरमानाथंशत्रुघ्नोरघुपुंगवम् प्रांजलिर्धर्मसहितंवाक्यंप्राहमहा
मतिः २४ अभिषिच्यसुतौतत्रराज्येराजीवलोचन तवानुगमनेराजन्विद्धिमांकृतनिश्चयम् २५ त्य
क्तुंनार्हसिमांवीर भक्तंतवविशेषतः शत्रुघ्नस्यदृढांबुद्धिंविज्ञायरघुनंदनः २६ सज्जोभवत्वमद्यान्हे
भवानित्यब्रवीद्वचः अथक्षणात्समुत्पेतुर्वानराःकामरूपिणः २७ ऋक्षाश्चराक्षसाश्चैवगोपुच्छाश्च
सहस्रशः ऋषीणांदेवतानांचपुत्रारामस्यनिर्गमम् २८ श्रुत्वाप्रोचूरघुश्रेष्ठंसर्वेवानरराक्षसाः त
वानुगमनेविद्धिनिश्चितार्थान्हिनःप्रभो २९ एतस्मिन्नंतरेरामंसुग्रीवोऽपिमहाबलः यथावदभिवा-
द्याहराघवंभक्तवत्सलम् ३० अभिषिच्यांगदंराज्ये आगतोऽस्मिमहाबलम् तवानुगमनेरामविद्धि
मांकृतनिश्चयम् ३१ श्रुत्वातेषांइदंवाक्यंऋक्षवानररक्षसाम् बिभीषणमुवाचेदंवचनंमृदुसादर
म् ३२ धरिष्यतिधरायावत्प्रजास्तावत्प्रशाधिमे वचनाद्राक्षसंराज्यंशापितोऽसिममोपरि ३३ २९ ३० ३१

३२ मेवचनात्प्रशाधिराक्षसंरक्षःसंबंधिराज्यंचप्रशाधि अतोन्यन्मावदेत्याह शापितोसीति अन्यवचनोक्तौमद्धपातकंतवेतिभावः ३३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

३४ ममाज्ञांचिरंजीवेत्येवंरूपांद्वापरांतरेएतच्चतुर्युगीभिन्नयत्किंचिच्चतुर्युग्यंतर्गतद्वापरे ३५ युद्धंभवेत्भविष्यतितनः स्वर्गंग
मिष्यसीतिशेषः अत्रजांबवद्ग्रहणंमैंदद्विविदयोरप्युपलक्षणंतान्हनूमज्जांबवदादिभिन्नान् ३६ ३७ मास्थानिकंमहाप्रस्थानो
चितंक्षौमांबरइत्यादिरामविशेषणम् ३८ पद्मालक्ष्मीः पूर्वंगतासीत्तत्कालेलक्ष्मीरूपेणसन्निहिताजातेत्यर्थः ३९ अरुणकं

नकिंचिदुत्तरंवाच्यंत्वयामत्कृतकारणात् एवंविभीषणंतूक्त्वाहनूमंतमथाब्रवीत् ३४ मारुतेत्वंचिरं
जीवममाज्ञांमामृषाकृथाः जांबवंतमथप्राहनिश्चलंद्वापरांतरे ३५ मयासार्द्धंभवेद्युद्धंयत्किंचित्का
रणांतरे ततस्तान्राघवःप्राहऋक्षराक्षसवानरान् ३६ सर्वानेवमयासार्धंप्रयातेतिदयान्वितः ततः
प्रभातेरघुवंशनाथोविशालवक्षासितकंजनेत्रः पुरोधसंप्राहवसिष्ठमार्यंयांत्वग्निहोत्राणिपुरोगुरोमे
३७ ततोवसिष्ठोऽपिचकारसर्वंप्रास्थानिकंकर्ममहद्विधानात् क्षौमांबरोदर्भपवित्रपाणिर्महाप्रयाणा
यगृहीतबुद्धिः ३८ निष्क्रम्यरामोनगरात्सिताभ्राच्छशीवयातःशशिकोटिकांतिः रामस्यसव्येसितप
द्महस्तापद्मागतापद्मविशालनेत्रा ३९ पार्श्वेऽथदक्षेऽरुणकंजहस्ताश्यामायर्योभूरपिदीप्यमाना शा
स्त्राणिशस्त्राणिधनुश्चबाणाजग्मुः पुरस्ताद्धृतविग्रहास्ते ४० वेदाश्चसर्वेधृतविग्रहाश्चययुश्चस
र्वेमुनयश्चदिव्याः माताश्रुतीनांप्रणवेनसार्द्धंययौहरिंव्याहृतिभिःसमेता ४१ गच्छंतमेवानुगताज
नास्तेसपुत्रदाराःसहबंधुवर्गैः अनावृतद्वारमिवापवर्गंरामंव्रजंतंययुरात्तकामाः ४२ सांतःपुरःसा
नुचरःसभार्यःशत्रुघ्नयुक्तोभरतोऽनुयायात् गच्छंतमालोक्यरमासमेतंश्रीराघवंपौरजनाःसम
स्ताः ४३ सबालवृद्धाश्चययुर्द्विजाग्र्याःसामात्यवर्गाश्चसमंत्रिणोययुः सर्वेगताःक्षत्रमुखाः
प्रहृष्टावैश्याश्चशूद्राश्चतथाऽपरेच ४५

जहस्ताख्कपद्महस्ताभूस्तदधिष्ठात्रीदेवताएवमग्रेऽपिबोध्यम् ४० दि
व्यामुनयःसनकादयःश्रुतीनांमातागायत्री ४१ अनावृतद्वारमिवापवर्गतुल्यंव्रजंतंराममनुययुः ४२ अनुयायादन्वगच्छदित्य-
र्थः क्वचित्तथैवपाठः ४३ सामात्यवर्गाः समंत्रिणोद्विजाग्र्यायय्ः क्षत्रमुखाः क्षत्रंक्षत्रियोमुखंमुख्याअग्रेसरायेषांताहृशावैश्यादयः
४४

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४५ दुःखबाह्यसुखयोगाभावेहेतुः आनंदरूपानुगताआनंदरूपंसममनुगताः तदनुगमनात्तदानंदप्रतिभासात्तद्योगः सर्वत्रवैरा-
ग्यंचेतिभावः ४६ जग्मुरनुजग्मुः योराममनारामंनयातोनानुयातस्तादृशोजंतुर्नासीदित्यर्थः ४७ राजनिगते: खिलंपुरंशून्यंब-
भूवहरिनेत्रजातांसरयूं ४८ स्मृतंपावनंविराड्रूपमात्मनोयेनसः अशेषमिदंजगत्तद्धृदिस्थंददर्श आत्मानंविराड्रूपंस्मृतवानित्यर्थः ४९

सुग्रीवमुख्याहरिपुंगवाश्चस्नाताविशुद्धाःशुभशब्दयुक्ताः नकश्चिदासीद्भवदुःखयुक्तोदीनोथवाबा
ह्यसुखेषुसक्तः ४५ आनंदरूपानुगताविरक्ताययुश्चरामंपशुभृत्यवर्गैः भूतान्यदृश्यानिचयानितत्र
येप्राणिनःस्थावरजंगमाश्च ४६ साक्षात्परात्मानमनंतशक्तिंजग्मुर्विरक्ताःपरमेकमीशम् नासीद-
योध्यानगरेतुजंतुःकश्चित्तदाराममनानयातः ४७ शून्यंबभूवाखिलमेवतत्रपुरंगतेराजनिरामचंद्रे
ततोतिदूरंनगरात्सगत्वादृष्ट्वानदींतांहरिनेत्रजाताम् ४८ ननंदरामःस्मृतपावनोतोददर्शचाशेषमि
दंहृदिस्थम् अथागतस्तत्रपितामहोमहान्देवाश्चसर्वेऋषयश्चसिद्धाः ४९ विमानकोटीभिरपा
रपारंसमावृतंखंसुरसेविताभिः रविप्रकाशाभिरभिस्फुरत्तज्ज्योतिर्मयंतत्रनभोबभूव ५० स्वयंप्र
काशैर्महतांमहद्भिःसमावृतंपुण्यकृतांवरिष्ठैः ववुश्चवाताश्चसुगंधवंतोववर्षवृष्टिःकुसुमावलीना
म् ५१ उपस्थितेदेवमृदंगनादेगायत्सुविद्याधरकिन्नरेषु रामस्तुपद्भ्यांसरयूजलंसकृत्स्पृष्ट्वापरि
क्रामदनंतशक्तिः ५२ ब्रह्मानदागाहकृतांजलिस्तंरामंपरात्मन्परमेश्वरस्त्वम् विष्णुःसदानंदमयो
सिपूर्णोजानासितत्त्वंनिजमेशमेकम् ५३

अपारपारंअवधिरूपपारद्वयहीनम् तादृशमपिविमानावृतमासीत् ज्योतिर्मयंनक्षत्रगणप्रचुरमिव ५० यत्रलोकेपुण्यंकृत्वास्व-
र्गेसर्वेभ्यआधिक्यंप्राप्तास्तैश्चनभःसमावृतंचोपादपूरणे ५१ परिक्रामत् पर्यक्रामत् जलोपर्यगच्छदित्यर्थः तत्रैवहेतुगर्भंविशे-
षणमनंतशक्तिरिति ५२ हेपरमात्मन्परमेश्वरः जगत्सृष्टिस्थितिलयकर्तात्वमेवेत्यर्थः त्वमैशमेकंनिजंतत्वंब्रह्मरूपंजानासि ५३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्यब्रह्मरूपस्यकथंशरीरपरिग्रहोतआह तथापीति भक्तानुग्रहार्थंमायया सर्वमिदंकृतमितिभावः अतोवैष्णवंदेहंप्रविश्यदेवान्पा
८ यदीतियइत्यर्थः अथवायोपरोदेहस्तवरोचतेतंप्रविश्यपाहि एवंविष्णुरूपंत्वांमांविनाअन्येपुरुषानजानंति ५५ एवंविष्णुरूपं-
त्स्याप्रणमति सहस्रेति ५६ चक्षूंषिमुष्णन्स्वप्रभयेतिशेषः रामदेहएवतथाभूतोजातः अनेनविष्णुदेहएवमाययाहि मुजत्वं-

तथाऽपिदासस्यममाखिलेशकृतंवचोभक्तपरोऽसिविद्वन् त्वंभ्रातृभिर्वैष्णवमेकमाद्यंप्रविश्यदेहंपरिपाहि
देवान् ५४ यद्वापरोवायदिरोचतेतंप्रविश्यदेहंपरिपाहिनस्त्वम् त्वमेवदेवाधिपतिश्चविष्णुर्जानंतिनत्वांपु
रुषाविनामाम् ५५ सहस्रकृत्वस्त्वनमोनमस्तेप्रसीददेवेशपुनर्नमस्ते पितामहप्रार्थनयासरामःपश्य-
त्सुदेवेषुमहाप्रकाशः ५६ मुष्णंश्चचक्षूंषिदिवौकसांतदाबभूवचक्रादियुतश्चतुर्भुजः शेषोबभूवेश्वर
तल्पभूतःसौमित्रिरत्यद्भुतभोगधारी ५७ बभूवतुश्चक्रदरौचदिव्यौकैकेयिसूनुर्लवणांतकश्च सीताचल
क्ष्मीरभवत्पुरैवरामोहिविष्णुःपुरुषःपुराणः ५८ सहानुजःपूर्वशरीरकेणबभूवतेजोमयदिव्यमूर्तिः
विष्णुंसमासाद्यसुरेंद्रमुख्यादेवाश्चसिद्धामुनयश्चयक्षाः ५९ पितामहाद्याःपरितःपरेशंस्तवैर्गृ-
णंतःपरिपूजयंतः आनंदसंप्लावितपूर्णचित्ताबभूविरेप्राप्तमनोरथास्ते ६०

शिष्टेनलोकदृग्गोचरआसीदितिसूचितम् भोगःसर्पशरीरंपूर्वंगतोऽपिसतस्मिन्नवसरेतेनसन्निहितः ५७ दरःशंखः लवणांतकःश
त्रुघ्नःसीताचपुरैवलक्ष्मीरूपाऽभवत् साऽपितत्कालेलक्ष्मीरूपेणसन्निहितासीदितिशेषः हियतोरामोविष्णुरित्यर्थः ५८ पूर्वशरीरकेणविष्णुदे
हेन ५९ ६०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नन्वेवं भगवतो विष्णुरूपप्राप्त्या वैकुंठवास इत्यायातं एवं च सभापर्वणि भारते सर्वदिक्पालसभावर्णने यमसभाप्रस्तावे दाशरथी रामो यमसभायां दृष्ट इति नारदेनोक्तं तद्विरुध्यते इति चेत् अत्र वदामः अवतारपरिग्रहस्य हि प्रयोजनद्वयं दुष्टवधेन शिष्टपालनं स्वाचरणेन लोकानां धर्ममर्यादाबोधनं च एत-दर्थमेव तेषां तत्तत्कर्मानुष्ठाने प्रवृत्तिरन्यथा अकामस्य भगवतः किं यज्ञाद्यनुष्ठानेन एवं च धर्मबोधनार्थं तदनुष्ठानवत् अजन्याद्दशधर्मानुष्ठानस्यापि सुकलो-कवासः फलमिति बोधयितुं दाशरथिरामत्वं प्रत्यभिज्ञापकेन मायिकेन केनचिच्छरीरेण तल्लोके वासो नास्ततः रामायणे एतदर्थाकथनं तु इतिहासेषु उ-क्तत्वात्सर्वज्ञानां वाल्मीक्यादीनां भूतभाविसर्वार्थज्ञानवत्त्वादित्यन्यत्र विस्तारः तदेति तदा तस्मिन्समये विष्णुर्द्रुहिणं ब्रह्माणमाह मदनुगमनादे

तदाह विष्णुर्द्रुहिणं महात्मा एते हि भक्ता मयि चानुरक्ताः यांतं दिवं मामनुयांति सर्वे तिर्यक्शरीरा अपि पुण्ययुक्ताः ६१ वैकुंठसाम्यं परमं प्रयांतु समाविशस्वाशु ममाज्ञया त्वम् श्रुत्वा हरेर्वाक्यमथाब्रवीत्कः सांतानिकान्यांतु वि-चित्रभोगान् ६२ लोकान्मदीयोपरि दीप्यमानांस्तद्भावयुक्ताः कृतपुण्यपुंजाः ये चापि ते रामपवित्रनाम गृण्हंति मर्त्यालयकाल एव ६३ अज्ञानतो वापि भजंतु लोकांस्तानेव योगैरपि चाधिगम्यान् ततोऽतिहृष्टा हरिराक्षसाद्याः स्पृष्ट्वा जलं त्यक्तकलेवरास्ते ६४ प्रपेदिरे प्राक्तनमेव रूपं यदंशजा ऋक्षहरीश्वरास्ते प्रभाकरं प्रापहरिप्रवीरः सुग्रीव आदित्यजवीर्यवत्त्वात् ६५ ततो विमग्नाः सरयूजलेषु नराः परित्यज्य मनुष्यदेहम् आरुह्य दि-व्याभरणा विमानं प्रापुश्च ते सांतनिकाख्यलोकान् ६६ तिर्यक्प्रजाता अपि रामदृष्टा जलं प्रविष्टा दिवमेव या-ताः दिदृक्षवो जानपदाश्च लोका रामं समालोक्य विमुक्तसंगाः ६७

वपुण्ययफक्तत्वानुमानम् ६१ वैकुंठसाम्यं वैकुंठस-लोकं स्वार्थे ष्यञ् चातुर्वर्ण्यादित्वादार्षत्वाद्वा एतान्ममाज्ञया समाविशस्व तादृशलोकं प्रवेशय त्वं कः ब्रह्मा सांतानिकाः लोकविशेषाः ६२ -कानामुत्तमत्वमाह मदीयोपरि दीप्यमानान् ब्रह्मलोकादूर्ध्वं दीप्यमानान् अपि च येऽपि मनुष्यालयकाल एव मरणकाल एव न तु ततः -प्राचित् तत्राप्यज्ञानतो वा अज्ञानत एव वा शब्द एवार्थः ते पवित्रनाम रामेत्येतद्गृणंति वदंति तेऽपि तानेव लोकान् योगैः प्राप्यान् भजंतु अ-यस्तु योगेंतकाले तन्नामस्मर्तव्यं च समइति सूचितम् ६३ ६४ यो यदंशजः स तद्रूपमेव प्रापेत्यर्थः तदाह प्रभाकरमिति आदित्यजवीर्यव-देहजवीर्योत्पन्नत्वात् ६५ सांतनिकाख्येत्यत्र ह्रस्व आर्षः ६६ रामदृष्टाः भगवद्दृष्ट्या क्षीणसर्वपापाः विमुक्तसंगा मूलेतिशेषः ६७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

